॥ श्रीः ॥

# समर्पणम् (वैचारिकलेखप्रचुरः सङ्ग्रहः)

## द्वादशं प्रसूनम् ।

गायत्री–साहित्य, पुण्यपत्तनम्
२०१७

सम्पादकः
डॉ. सौ. आशा गुर्जर (फडके)

॥ श्रीः ॥

# समर्पणम् (वैचारिकलेखप्रचुरः सङ्ग्रहः)

## प्रा. ग. बा. पळसुले स्मृतिग्रन्थमालायाः

## द्वादशं प्रसूनम् ।

### सम्पादकमण्डलम्

| | |
|---|---|
| भाग्यलता पाटसकर | आशा गुर्जर |
| शैलजा कात्रे | ज्योत्स्ना खरे |
| तरंगिणी खोत | सुप्रिया महाजन |
| प्रणव गोखले | भाग्यश्री भागवत |

स्वामित्वम् (प्रा. ग. बा. पळसुले स्मृतिग्रन्थमाला समितिः)

प्रकाशनदिनम् :२८-११-२०१७

अक्षरविन्यासः

अदिती विलास पंडित (मोबाईल ८४८५८२५८५२)

मुखपृष्ठम् – श्री. सचिन पांडे मो.९८८१४६०६४०

मुद्रणम् – पिक्सो प्रिंटर्स, १३११, कसबा पेठ, पुणे ४११०११

प्रकाशनम्-प्राप्तिस्थलम्-

डॉ. सौ. आशा गुर्जर (फडके), गायत्री साहित्यम्

२६/१२, प्रतीकनगरम्, पुण्यपत्तनम्, ४११००६

दूरभाषः ०२०-२६६९५१६८ चलध्वनिः ७७५५९११३०८

मूल्यम् - सार्धद्विशतरूप्यकाणि - २५०/-

## प्रा. गजानन बाळकृष्ण पळसुले – अल्पपरिचयः

जन्म – ०१.११.१९२१, मृत्युः – २८.११.२००५

शिक्षणम्– बी.ए. (१९४३), एम्.ए.(१९४८), पीएच्.डी. (१९५७)

**सम्मानाः –**

१. सर्वोत्कृष्टनाटकलेखनार्थम्(समानमस्तु वो मनः) भारत–शासनतः (१९६३)
२. श्रीमंत- नानासाहेब- पेशवे धार्मिकआध्यात्मिक- पुरस्कारः (पुणे १९९१)
३. राष्ट्रियसंस्कृतपण्डितत्वेन राष्ट्रपतिपुरस्कारः (१९९५)
४. 'अमृतमन्दाकिनी' गौरवग्रन्थसमर्पणम् (१९९६)
५. 'वैनायकम्' महाकाव्यार्थं कालिदासबिर्लादालमियापारितोषिकाणि ।
६. स्मृतिग्रन्थमाला एकादश प्रसूनानि (२००६-२०१६) 'समर्पणम्' इति ।

**शास्त्रीयाः कृतयः –** युभातः संस्कृतं प्रति,
कविकल्पद्रुमः (बोपदेवीय–धातुपाठस्य चिकित्सकं संस्करणम्)
*Sanskrit Dhātupāṭhas : A Critical Study. (Ph.D Thesis)*
*A Concordance of the Sanskrit Dhātupāṭhas*
*Sixty Upaniṣads of the Vedas* (जर्मनग्रन्थानुवादः आङ्ग्ल्याम्)
*Verbal Forms in the Ṛgveda (maṇḍala VI)*
संस्कृतचा इतिहास आणि पूर्वेतिहास, संस्कृतभाषेच्या काही समस्यांवर आधुनिक भाषाशास्त्राने टाकलेला प्रकाश, वैदिकभाषेच्या जडणघडणीचे काही पैलू (एताः तिस्रः – मराठी–व्याख्यानमालाः) महाभाष्यदीपिकायाः कतिपयखण्डानां चिकित्सक–संपादनम् (भाण्डारकर–संस्था–प्रकाशनम्), अन्ये च परः शताः संशोधनलेखाः ग्रन्थप्रस्तावनाः ग्रन्थपरीक्षणानि च । भारतवाणी-संस्कृत–पाक्षिकपत्रिकायाः आद्यः प्रधानसंपादकः ।

**मौलिक्यानि नाटकानि –** १. समानमस्तु वो मनः। २. धन्योऽहं धन्योऽहम्। ३. भासोऽहासः । **द्वे चरिते** – विनायक–वीरगाथा, विवेकानन्दचरितम् ।

**महाकाव्यम्**–वैनायकम्(कालिदास–बिर्ला–दालमिया–पारितोषिकैः सम्मानितम्)

**काव्यानुवादाः –** कमला, अग्निजा, तुका वक्ति, पञ्चवटी ।

**नाटकानुवादाः –** भ्रातृकलहम् (अप्रकाशितम्), अथातो ज्ञानदेवोऽभूत्, धन्येयं गायनी कला, रूपकचातुष्टयम् (यदा रायदुर्गो जागर्ति, अत्र मृत्युर्विलज्जितः, अन्धं युगम्, उत्तिष्ठ कौन्तेय)।

*****

## प्राक्कथनम्

ऐषमः द्वादशतमं वर्षं समर्पणप्रकाशनस्य । गुरुचरणेषु समर्पणं कृतज्ञताबुद्ध्या समर्प्य ऋषिऋणप्रत्यर्पणम् अंशतः तावत् विहितम् इति धिया समाहिताः स्मः । परं तु...

अतीव दोदूयते चेतः संस्कृतक्षेत्रे वर्तमानानां जनानाम् औदासीन्यम् अनुभूय । नोव्हेंबरमासस्य २८ दिने प्रतिवर्षं समर्पणस्य प्रकाशनं भविष्यति इति सुनिश्चितमस्ति । परं स्वयंस्फूर्त्या कोऽपि लेखकः 'अस्मिन् वर्षे किं लेखनीयम्?' इत्येतादृशीं पृच्छां न करोति । संस्कृत-सम्बन्धिन्यः पञ्चत्रिंशदधिकाः संस्थाः एकीभूय संस्कृतदिनसमारोहम् आयोजयन्ति । तत्रापि संस्कृतजनानाम् उपस्थितिः विरला भवति । गीर्वाणवाग्वर्धिनी संस्था गतेषु पञ्चाशीतिवर्षाणि यावत् संस्कृतभाषाप्रचारस्य कार्यं प्रतिपक्षं संस्कृत-भाषणरूपेण करोति । तत्रापि पञ्चषाः वृद्धा एव आगच्छन्ति । लब्धपदाः उच्चाधिकारिणः पुरस्कारदिभिः सम्मानिताः च संस्कृत विद्वांसः एतादृशेषु संस्कृतसंवद्धेषु कार्यक्रमेषु अनुपस्थिताः एव भवन्ति ।

पुण्यपत्तनं प्राचीनकाले प्रतिष्ठितं संस्कृतविद्याकेन्द्रम् आसीत् । अद्यापि पुण्यपत्तनं प्रति आकृष्टाः भारतस्य अन्यराज्यगताः भारतीयाः तथा च वैदेशिकाः अपि । परम् अत्रागमनोत्तरं क्वचित्ते हतोत्साहाः अपि भवन्ति – 'दूरतः पर्वताः रम्याः' इति अनुभूय । जगतितले यदा संस्कृतं सम्मानार्हं भवति, तदा तावत् संस्कृतज्ञैः सोत्साहैः सावधानैः च भाव्यं संस्कृताभिवृद्ध्यर्थम् आत्मोन्नत्यर्थं च।

महाराष्ट्रं विहाय अन्येषु राज्येषु संस्कृतलेखनं प्राचुर्येण भवति तदपेक्षया महाराष्ट्रे अल्पमेव संस्कृतसाहित्यलेखनं भवति । अस्य समर्पणाख्यस्य निबन्धनस्य प्रयोजनं संस्कृतलेखनाय संस्कृतलेखनाभ्यासाय वा भवतु किमप्यधिष्ठानमिति । अस्मिन् निबन्धने यथा केचित् वैदुष्यपूर्णाः अदुष्टाः लेखाः सन्ति तथैव केषुचित् लेखेषु भवेयुरत्र स्खलनानि प्रमादाः वा परं तेषां मूलं कारणं संभवति अज्ञानम् अनभ्यासश्च । तयोः निराकरणं विदुषां दिग्दर्शनात् अभ्यासवशादेव सम्भवति ।

अत्रत्यं लेखनं भ्रष्टं श्लिष्टं वा क्लिष्टमिति ये कुत्सनपराः जल्पन्ति ते काममेव जल्पन्तु । परं ये संस्कृतविद्वांसः सहृदयाः सुहृदयाः वा सन्ति ते –

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ।।

इति न्यायेन निबन्धनस्यास्य संपादने साधुकरणे वा प्रवर्तिष्यन्ते चेत् महान्ताम् अनुग्रहं मंस्यामहे ।

केषुचित् निबन्धेषु परभाषीयाः प्रत्ययहीनाः पदप्रयोगाः सन्ति, तत्र ते ते लेखकाः एव प्रमाणभूताः । अस्मिन् आधुनिके लेखनप्रकाशने सौकर्यार्थं सन्धिनियमाः न दृढतयादृताः सन्ति । अस्मिन् निबन्धने लेखकानां नामनिर्देशनं निरुपाधिकमेव कृतम्, तत्तु न असूक्षणाय अपि तु लाघवाय ।

अस्मिन् ग्रन्थे प्रतिवर्षमिव संस्कृतमंदाकिनीगीतम् तथा च गुरुवर्याणां अल्पपरिचयः दत्तोऽस्ति । वैचारिकलेखैः सह अपवादरूपेण कानिचन स्तोत्राणि अपि स्वीकृतानि।

दिविस्थाः अस्मदीयाः गुरुचरणाः अभ्यस्तानां संस्कृतविदुषां पदप्रबन्धैः तथा च अनभ्यस्तानां बालानामपि प्रयस्तैः पदन्यासैः अनया प्रवृत्या एव तोषमवाप्स्यन्ति इति मत्या समपर्णमिदं समर्प्यते ।

प्रथमतास्तावत् सर्वे लेखकाः वाचकाश्च अभिनन्दनपूर्वकं धन्यवादार्हाः । सुष्ठु अक्षरविन्यासार्थं अदिती पंडितमहोदया धन्यवादार्हा । तथैव सौ. संगीता जोशीमहोदया अपि। मुखपृष्ठार्थं सचिन - पाण्डेमहोदयाय धन्यवादाः। समये ग्रन्थमुद्रणार्थ 'पिक्सो प्रिंटर्स' मुद्रणालयस्य अधिकारिणः प्रति कृतज्ञतां प्रकटयामः।

*****

*डॉ. आशा-गुर्जर-महोदया*
*महाराष्ट्र- सेवासंघ (मुलुंड) संस्थाद्वारा*
*संस्कृतभाषाप्रचार-पुरस्कारेण सम्मानिता।*
*(१८-११-२०१७ दिने)*
*तत्र पारितोषिकरूपेण प्राप्तः धनराशिः २१०००/-*
*रूप्यकात्मकः, 'समर्पणम् - २०१७'*
*इत्यस्य कृते विनियोजितोऽस्ति, सधन्यवादम्!*

*

## अनुक्रमः

त्वर्यताम्! त्वर्यताम्!

आगामिनि वर्षे समपर्णम् २०१८ इत्यस्य कृते

लेखकेभ्यः निवेदनम् ।

**विषयः – कथाः, स्वरचिताः अनूदिताः रूपान्तरिताः वा ।**

**स्वीकरणस्य कालमर्यादा – ३० ऑगस्ट २०१८**

**प्रेषणस्थलम् –**

asha.gurjar48@gmail.com

*jukhare*@gmail.com, tnkhot@gmail.com

# संस्कृत-अनुप्रयोगाः सङ्गणकीयसंसाधनानि च

## (Sanskrit apps & Online Computational Tools)

नीलेश जोशी

आधुनिकं युगं विज्ञानयुगं तत्रापि सङ्गणकयुगं नाम्ना प्रसिद्धम्। सङ्गणकयुगेस्मिन्नधुना सर्वं कार्यं सङ्गणकेनैव भवति । सर्वत्र सङ्गणकप्रक्रियासन्निविष्टानि संसाधनानि प्रयुक्तानि सन्ति । तथा च साम्प्रतकाले आबालवृद्धानां सर्वेषां हस्तेषु अभिज्ञभ्रमणध्वनयः *(Smart Phones)* दृश्यन्ते । अधुना सर्वं जगन्मुष्टिगतं ननु । दैनन्दिनजीवनोपयोगीनि संसाधनानि निर्माय अभिज्ञभ्रमणध्वनिमाध्यमेन जीवनं सहजं सुसह्यं च भवितुमुपयोजितविज्ञानशाखान्तर्गतकार्यमग्नाः वैज्ञानिकाः संशोधकाश्च प्रयतवन्तः सन्ति ।

संस्कृतभाषाक्षेत्रेपि विभिन्नाः संस्कृत-अनुप्रयोगाः विनिर्मिताः सन्ति । वस्तुतः सङ्गणकीयतन्त्रांशाः द्विविधाः विभज्यन्ते । प्रथमः तन्त्रांशो यः पुनर्भागद्वये विभाजितो जालसंयुक्ततन्त्रांशो जालवियुक्ततन्त्रांशश्च । सोऽन्तर्जालसंयुक्तो वियुक्तो वा तन्त्रांशः सङ्गणकीयसंसाधनम् इति नाम्ना विख्यातः । अपरः प्रकारकः तन्त्रांशोभिज्ञभ्रमणध्वनौ वर्तते स अनुप्रयोगः इति नाम्ना ज्ञातः खलु । लेखेऽस्मिन् यानि कानि संस्कृतविषयकानि सङ्गणकीयसंसाधनानि तथा चाभिज्ञभ्रमणध्वनिमाध्यमे समुपलब्धाः अनुप्रयोगाः सन्ति तेषां संक्षिप्ततो ज्ञप्तिः संस्कृतस्य प्रचारार्थं प्रसारार्थं जनहितार्थं च प्रदीयते नात्र किमपि कौशल्यं ज्ञप्तिसंयोजनं तु विशेषः।

- विविधानि जालसंयुक्तसङ्गणकीयसंसाधनानि

बहुविधसङ्केतस्थलेषु संस्कृतविषयकं साहित्यं समुपलभ्यते। अत्र केवलं सङ्गणकीयसंसाधनानां ज्ञप्तिरेव दीयते । शब्दकोशः, पदनिष्पादकाः, पदविश्लेषकः, सन्धिनिष्पादकः आदिविषयसम्बन्धि सङ्केतस्थालानां सार्वसङ्केतः *(URL)* अधोनिर्दिष्टः ।

- बहुभाषिकशब्दकोशः(Multilingual Dictionary)
  - **संस्कृतशब्दबन्धः** (Sanskrit Word Net)

*=http://www.cfilt.iitb.ac.in/wordnet/webswn/wn.php*

भारतीयप्राद्यौगिकीसंस्थानम् मुंबई इत्यनया संस्थया बहुभाषिकशब्दकोशः निर्मितः । अस्मिन् संस्कृतशब्दस्य सार्थं समानार्थकशब्दाः तथा च अन्यासु भारतीयभाषासु वियमानाः तदर्थकाः शब्दाः उपलब्धाः भवन्ति । अनेन बहुविधभाषिकाः जनाः संस्कृतमन्यभाषाश्चाध्येतुं शक्नुवन्ति ।

- **पदनिष्पादकः** (Morph-Generator)

भारतसर्वकारस्य भारतीयभाषाप्रायोगिकीविकासविभागेन विभिन्नाः पदनिष्पादकाः विनिर्मिताः । अनेन संसाधनेन स्वयंचालितानि नाम–क्रिया–कृत्तद्धित–रूपाणि भवन्ति ।

- **नामपदनिष्पादकः , क्रियापदनिष्पादकः, कृदन्तपदनिष्पादकः, तद्धितपदनिष्पादकः**
- *=http://tdil-dc.in/san/skt_gen/generators.html*

- **उस्मानियाविश्वविद्यालयनिर्मितानि संसाधनानि**

उस्मानियाविश्वविद्यालयस्य संस्कृत–अध्ययन–विभागेन विविधानि स्वयश्चालितसङ्गणकीयसंसाधनानि निर्मितानि तानि अधोनिर्दिष्टानि।
**पद–विश्लेषिका** (Morphological Analyser) अनेन साहाय्येन पदस्य जाति – लिङ्ग – वचन प्रत्ययादिघटकानां ज्ञप्तिः लभ्यते ।
**सन्धिः** (Sandhi) अनेन शब्दानां सन्धिः कर्तुं शक्यते ।
**सन्धि–विच्छेदिका** (Sandhi-Splitter) अनेन शब्दानां सन्धिविच्छेदः।
**प्रक्रिया–सन्दर्शिनी** *(Aṣṭādhyāyī Simulator)* अनेन शब्दस्य पाणिनिनोक्तप्रक्रिया लभ्यते नाम रूपसिद्धर्थमावश्यकानि सर्वाणि सूत्राणि क्रमेण उपभ्यन्ते ।
**लिपि–परिवर्तनिका***(Transliteraion)* अनेन लिप्यन्तरणं भवति तदर्थम्-*http://sanskrit.uohyd.ac.in/scl/*

पद–निष्पादिका Mophological Generator अनेन संसाधनेन स्वयंचालितप्रक्रियया नाम–क्रिया–कृत्तद्धित–रूपाणि भवन्ति । तथा सामासिकपदमपि ।

- नामरूपनिष्पादिका *(Noun-Generator)*
- क्रियारूपनिष्पादिका *(Verb-forms-Generator)*
- कृदन्तरूपनिष्पादिका (Krt-Generator)
- तद्धितरूपनिष्पादिका *(Taddhita-Generator)*
- समस्तपदव्युत्पादिका *(Compound Generator)*

एतेषां कृते *http://sanskrit.uohyd.ac.in/scl/*

**INRIA संस्थानस्य संसाधनानि**

फ्रेंचराष्ट्रस्य सङ्गणकविज्ञान– यन्त्रीकरण– संशोधन– संस्थानम् (INRIA) तस्य संस्कृतविभागेन सुबन्तनिष्पादकः तिङ्न्तनिष्पादकः च विनिर्मितौ ।

- सुबन्तनिष्पादकः (Declension)
- तिङ्न्तनिष्पादकः (Verbal Conjugation)

○ संस्कृत–छन्दः प्रतिबुद्धकः*(Sanskrit Metre Recognizer)*

एतेषां कृते = *http://sanskrit.sai.uni heidelberg.de/ Chaṇda/ HTML/v_toTakam_0.html*

जर्मनीराष्ट्रस्य दक्षिण–आशियायी विश्वविद्यालयस्य प्राचीन-भारतीयविद्याविभागेन विनिर्मितसंसाधनस्य अनेन साहाय्येन अनुष्टुप्–मन्दाक्रान्ता–शार्दूलविक्रीडितादीनि विविधानि छन्दांसि ज्ञातुं शक्यते ।

- विभिन्नाः संस्कृत–अनुप्रयोगाः (Sanskrit Apps)

अत्र गुगल–क्रीडापणे *(Play-store)* ये के संस्कृत–अनुप्रयोगाः सन्ति ते तेषां नामाभिः सह यथामूलं उल्लिखिताः तथा च तेषां निर्मिति-कर्तापि निर्दिष्टः । अत एव आङ्ग्लभाषायां नामानि सन्ति । एते सर्वे अनुप्रयोगाः निःशुल्काः सन्ति ।

○ संस्कृतस्य अध्ययनार्थम् अनुप्रयोगाः

- *Learn Sanskrit = Amar D L*
- *Learn Simple Sanskrit = Abhivyakty App*
- *Learn Sanskrit Alphabets = Vyoma Labs*
- *Learn Sanskrit Easy = Think Vision Studios*
- *Learn Sanskrit via Video = WAG Mobile Software Services*
- *Learn Sanskrit Simple Sanskrit Words = Vyoma Labs*
- *Sanskrit Essays = Elexpras Education*

○ शब्दकोशाः

- शब्दकल्पद्रुमः *(Shabdakalpadruma) = Shruti Jha*
- वाचस्पत्यम् *(Vacaspatyam) = Shruti Jha*
- अमरकोशः *(Amarkosha) = Shruti Jha*
- संस्कृतशब्दबन्धः *Sanskrit Word Net = IIT Bombay*
- *Sanskrit Talking Dictionary = Khandbahale*
- *Sanskrit Hindi Dictionary = Shruti Jha*
- *Sanskrit English Dictionary = Shruti Jha*
- *Sanskrit Dictionary = Abhisoft Tech*
- *Increase Sanskrit Vocabulary = Vyoma Labs*

○ व्याकरणस्य अध्ययनार्थम् अनुप्रयोगाः

- *Sanskrit Ashtadhyayi Sutra = Shruti Jha*
- पाणिनि–अष्टाध्यायी *(Panini Ashtadhyayi) = Shruti Jha*
- सिद्धान्तकौमुदी *(Siddhanta kaumudi) = Shruti Jha*
- शब्दरूपमाला *(Shabdaroopamala) = Shruti Jha*
- धातुरूपमाला *(Dhaaturoopamala) = Shruti Jha*
- *Sanskrit Kaumudi 1 to 7 = Aagam books*
- सुबन्त–शिक्षिका *(Subanta Sikshika) = Mamillasoft Tech*

- कृदन्त–शिक्षिका *(Krdanta Sikshika) = Mamillasoft Tech*
- *Sartha Sanskrit Subhashitamala = Shree++*

o आयुर्वेदस्य अध्ययनार्थम् अनुप्रयोगाः

- चरकसंहिता–चक्रपाणिटीका (Charak Samhita-Chakrapani Teeka) = Dr. Vilobh Bharatiya
- सुश्रुतसंहिता–डल्हणटीका (Sushrut Samhita-Dalhan Teeka) = Dr. Vilobh Bharatiya
- अष्टाङ्गहृदय–अरुणदत्तटीका *(AshtangHriday-Arundatta Teeka) = Dr. Vilobh Bharatiya*
- अष्टाङ्गसंग्रह–इन्दुटीका *(Ashtang Sangraha-Indu Teeka) = Dr. Vilobh Bharatiya*
- शालाक्य *Shalakya 1(Ophthalm) = Dr. Vilobh Bharatiya*
- शालाक्य *Shalakya 2 (ENT-Oro Dental) = Dr. Vilobh Bharatiya*

o साहित्यादिविषयकाः

- *Bhagavad Gita Sanskrit Audio = ISKON*
- *Vedas Chanting Audio = reSun Apps*
- *Sanskrit Quotes = Srichakram*
- *Sanskrit Subhashitani = Vijay Shastri*
- *Rigved in Hindi = Samarth Apps*
- *Mahabharat = bharat for mobile*
-

अनेन ज्ञानवृद्धिस्तथा संस्कृतक्षेत्रेऽपि विविधानि संशोधनानि भवन्ति । सङ्गणकयुगेऽपि संस्कृतभाषा न विलुप्ता भवितुमर्हति अपि तु सुलभा ज्ञानप्रदायिनी खलु सा इति सिद्ध्यते । अभिज्ञाभ्रमणध्वनौ अवश्यमेतान् अनुप्रयोगान् अवचिन्वन्तु *(Download)* उपयुञ्जन्तु च । तदैवास्माकं प्रयत्नः सफलीभविष्यति।

*****

